॥ श्रीः ॥

श्रीपुंडरीकविठ्ठलविरचिता

# रागमंजरी ।

एतत्पुस्तकम्

पुण्यपत्तनस्थपंडितदत्तात्रेयकेशवजोशीत्यभिधेन यथामति

संशोधितम् ।

तच्च

भालचन्द्रशर्मणा

आर्यभूषणाख्यमुद्रालये मुद्राक्षरैरंकयित्वा

प्राकाश्यं नीतम् ।

शकः १८४० सन् १९१८

अस्य ग्रन्थस्य मुद्रणे यद्धनमपेक्षितं तत्सकलमपि
श्रीमन्महीशूरयुवराजमहाशयैः ' सर के. नरसिंह–
राज वडियार जी. सी. आय्. ई. '
इति लक्षणांकितैः परमो–
दारचरितैरदायि ।

Printed at the Arya-Bhushan Press, Poona,
by Anant Vinayak Patvardhan,

AND

Published by Bhalchandra Sitaram Sukthankar, M. A. LL. B.,
at 2 Malabar Hill, Bombay.

# प्रस्तावना.

पंडित पुंडरीकविठ्ठलानें संगीतावर संस्कृतांत चार ग्रंथ लिहिले आहेत, ते असेः— सद्रागचंद्रोदय, रागमंजरी, रागमाला व नृत्यनिर्णय.

सद्रागचंद्रोदयाचे शेवटीं ग्रंथकारानें आपलें राहण्याचें ठिकाण व आपल्या वाडवडिलांची माहिती दिलीच आहे.

ग्रंथारंभीं खानदेशांतील फरकी घराण्याचें वर्णन करून अहंमदखान, ताजखान व बुरहाणखान या राजांचीं नांवें त्यानें दाखल केलीं आहेत व आनंदवल्ली त्यांची राजधानी होती, असेंही म्हटलें आहे. खानदेशांत फरकी घराणें इ. स. १३७० पासून १६०० पर्यंत राज्य करीत होतें असा इतिहासांत दाखला सांपडतो. पुढें अकबर बादशाहानें आपले सुभेदार पाठवून तो देश आपल्या राज्यास जोडल्यामुळें तें घराणें नामशेष झालें असावें असा इतिहासज्ञांचा तर्क आहे.

पुंडरीकविठ्ठलानें सद्रागचंद्रोदय ग्रंथ लिहिला त्यावेळीं तो बुरहानखानाच्या पदरीं होता.

रागमंजरी ग्रंथाच्या आरंभीं त्यानें अकबरबादशहाच्या पदरीं असणाऱ्या राजा भगवानदासाचे पुत्र राजा माधवसिंह व राजा मानसिंह यांची स्तुति केली आहे; यावरून तो त्या वेळीं त्यांच्या पदरीं असावा असें दिसतें.

रागमंजरी ग्रंथ जेव्हां पुंडरीकानें लिहिला तेव्हां प्रचारांत कांहीं मुसलमानी रागही त्याच्या दृष्टीस पडले, त्यांच्याशीं समप्रकृतिक संस्कृत कोणते राग होत असत याचेंही दिग्दर्शन थोडक्यांत त्यानें आपल्या ग्रंथांत युक्तीनें करून दाखविलें आहे; तो भाग खराच मनोरंजक आहे.

रागमाला ग्रंथाचा एक विशेष असा आहे कीं, ग्रंथकारानें मागील दोन ग्रंथांप्रमाणें मेळपद्धति न स्वीकारितां राग व त्यांच्या भार्यापुत्र असें वर्गीकरण करून दाखविण्याचा प्रयत्न केला तोही मार्मिक झाला आहे. ही पद्धति बहुधा दाक्षिणेकडे दिसत नाहीं. फार दिवस उत्तर हिंदुस्थानांत राहिल्यानें तिकडील ग्रंथकार व संगीतवेत्ते यांचा परिचय अधिक झाल्यामुळें त्यानें हें वर्गीकरण करून दाखविलें असावें असें आम्हांस वाटतें. त्याच्या या वर्गीकरणांत समंजसतत्त्व आहे हें खोटें नाहीं.

चवथा ग्रंथ जो नृत्यनिर्णय तो त्यानें लिहिला त्यावेळीं तो अकबरबादशाहाच्या पदरीं होता असें त्या ग्रंथारंभींच्या श्लोकांवरून स्पष्ट दिसून येतें.

एकंदरींत पाहतां पंडित पुंडरीकविठ्ठल हा सोळाव्या शतकाच्या उत्तरार्धांत होता असें वरील साऱ्या पुराव्यावरून दिसून येईल. उत्तरेच्या संगीतावर लिहितांना त्याच्या प्रांतांत प्रचलित असलेला शुद्धस्वर मेळच त्यानें आपल्या ग्रंथांत ठेविला आहे. ग्रंथाची भाषा प्रौढ व विवेचनपद्धति तारिफ करण्यासारखी आहे. उत्तरेच्या रागांस दक्षिणेची जन्यजनकपद्धति लावून त्यांचें जें त्यानें वर्गीकरण केलें आहे, त्यांत खरोखर त्याचें चातुर्य दिसून येतें.

सद्रागचंद्रोदय व रागमाला हे दोन ग्रंथ पूर्वींच छापून प्रसिद्ध झाले आहेत.

रागमंजरी या ग्रंथाची हस्तलिखितप्रत बिकानेरच्या महाराजांच्या पुस्तकालयांत आहे; ती पाहण्याचा सुयोग आमचे मित्र डॉ. विष्णु सीताराम सुकथनकर एम्. ए. पीएच्. डी. असिस्टंट सुपरिंटेंडंट अर्क्यालॉजिकलसर्वे, यांच्यामार्फत आम्हांस आला त्याबद्दल, व ग्रंथकाराचा कालनिर्णय करण्याचे कामीं त्यांनीं जें आम्हांस साहाय्य केलें त्याबद्दल आम्हीं त्यांचे फार आभारी आहों.

पुणे,
ता० २२।६।१८ } **पं. दत्तात्रेय केशव जोशी.**

॥ श्रीः ॥

# रागमंजरी ।

श्रीगणेशाय नमः

श्रीमत्कच्छपवंशदीपकमहाराजाधिराजेश्वरः ।
तेजःपुंजमहाप्रतापनिकरो भानुः क्षितौ राजते ॥
तस्यासीद्भगवंतदासतनयो वीराधिवीरेश्वरः ।
क्षोणीमंडलमण्डनो विजयते भूमंडलाखंडलः ॥ १ ॥
तस्य द्वौ तनयौ प्रभूतविनयौ शूरौ महाधार्मिकौ ।
जातौ पंक्तिरथात्मजौत्वकबरक्षोणीपतेः स्वौ भुजौ ॥
सिंहौ माधवमानपूर्वपदकौ संग्रामदक्षावुभौ ।
तेजत्यागसहस्रहस्तकलितौ श्रीसर्वभूमीश्वरौ ॥ २ ॥
अकबरनृपधर्मी शक्रतश्चातिभीमो ।
धरणिगगनमध्ये जंगमो मध्यमेरुः ॥
सकलनृपतिताराचंद्रसूराविमौ द्वौ ।
जगतिजयनशीलौ माधवामानसिंहौ ॥ ३ ॥
तयोर्माधवसिंहोऽयं राजा परमवैष्णवः ।
सर्वदा विष्णुभक्त्यर्थं नाट्यारंभं करोति हि ॥ ४ ॥
अनेककोटिब्रह्मांडनायक । द्रौपदीलज्जानिवारक ।
बहुरूपधारक । पारिजातापहारक । दुष्टभंजक ।
शिष्टपालक । गोपीजनवस्त्रापहारक । गोवर्धनोद्धारक ।
देवकीनंदन । यशोदानंदवर्धन । शकटभंजन ।
कंसचाणूरमर्दन । नंदनंदन । भक्तवत्सल । सच्चिदानंदविग्रह ।

वदान्तवेद्यस्य भक्त्युत्पादनसाधनाय, नृणां कर्मकौतूहलाय, सामाजिकानां मनश्चमत्काराय, नाट्यारंभमेलनं मेलयति । वांशिकवंशमुखोद्गीर्णदेवगांधाररागसरिगमप्रमाण-प्रेंखोलितश्रोत्ररमणीये । कांस्यतालरंजकमृदंगध्वनिरण-रणितविपंचीवानिशंगर्भितसौंदर्ये । आलापिनीश्रुतिसं-धानत्रिस्थानप्रौढिदशविधरागनानागमकविचित्ररागा-लापनतालवैचित्र्यमेलापकगणगंधर्वगायनगीते श्रूयमाणे सति ।

राजा–

शुष्कांगी घनचार्वांगी काकली तव किन्नरी ।
वर्द्धमानोल्लसद्रागं विवादयति तत्कथम् ॥ ५ ॥
नानापंडितमंडिता सुरसभा श्रीधर्ममूर्तिः सभा ।
श्रीमद्राजकुमारशोभितसभा प्रख्यातकीर्तिः सभा ॥
ब्रह्माविष्णुमहेश्वरैः परिचिता संपूर्णविद्या सभा ।
श्रीमन्माधवसिंहराजरुचिदा शृंगारहारा सभा ॥ ६ ॥
अगणितगणकचिकित्सकवेदान्तन्यायशब्दशास्त्रज्ञाः ।
दृश्यन्ते बहवः, संगीती नात्र दृश्यतेऽप्येकः ॥ ७ ॥
इत्युक्ते माधवे सिंहे, विट्ठलेन द्विजन्मना ।
नत्वा गणेश्वरं देवं रच्यते रागमंजरी ॥ ८ ॥
युष्मदादेशमन्वेति प्रजाचक्रं जगत्त्रये ।
किंतु मत्प्रेमतः संतः पुरस्कुर्वन्तु मत्कृतिम् ॥ ९ ॥
बहुगतिरंजकरसिको गुंजत्तानक्रिया द्विपक्षश्च ।
अकवश्चैकरेफोऽयं जयति श्रीरागमंजरीरसपः ॥ १० ॥
नादश्रुतिस्वरग्राममूर्छनातानमंडितः ।
जनचित्तं रंजयति स रागः कथितो बुधैः ॥ ११ ॥

अथ नादः ।

मनो युंक्ते विवक्ष्वात्मा हन्ति वह्निं मनोऽनलः ।
प्रेरयत्यनिलं प्राणाननिलश्चोर्ध्वक्रमाच्चरन् ॥ १२ ॥
नाभिहृद्गलशीर्षास्येष्वाविर्भावयति ध्वनिम् ।
नादोऽति सूक्ष्मः सूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः ॥ १३ ॥
पंचाख्या इति धत्तेऽसौ चतुर्धा व्यवहारतः ।
अनुमंद्रो नाभिदेशे मंद्रो हृदि गले मतः ॥ १४ ॥
मध्यस्तारस्तु मूर्ध्नि स्याद्द्विगुणश्चोत्तरोत्तरः ।
तद्ग्राहकाश्च श्रुतयो यथा पारदगर्तकाः ॥ १५ ॥
ध्वनिस्तु नदधातोर्हि सद्भिर्नादो ध्वनिस्मृतः ॥

इति नादः ।

हेतवो नादभेदस्य तिर्यक् सच्छिद्रनाडिकाः ।
द्वाविंशतिः प्रतिस्थानं सोपानाकारवत्क्रमात् ॥ १६ ॥
वायुपूरणतस्तारस्तत्तारस्तूत्तरोत्तरम् ।
प्रभवंत्युच्चोच्चतराः श्रुतयः श्राव्यमात्रतः ॥ १७ ॥
तीव्रा कुमुद्वती मंदा छंदोवती दयावती ।
रंजनी रतिका रौद्री क्रोधा वज्री प्रसारिणी ॥ १८ ॥
प्रीतिर्मृजा क्षिती रक्ता संदीपिन्यथ लापिनी ।
मदंती रोहिणी रम्या चोग्रा क्षोभिणिकेतिच ॥ १९ ॥
श्रुतिनामानि ख्यातानि पूर्वाचार्यैः क्रमादिति ॥

इति श्रुतयः।

रागादिव्यवहाराय तासु सप्त स्वराः स्थिताः ।
षड्जश्च ऋषभश्चैव गांधारो मध्यमस्तथा ॥ २० ॥
पंचमो धैवतश्चाथ निषादश्चेत्यनुक्रमात् ।
तेषां संज्ञाः सरिगमपधनीत्यपरा मताः ॥ २१ ॥

वेदाचलांकश्रुतिषु त्रयोदश्यां श्रुतौ ततः ।
सप्तदश्यां च विंश्यां च द्वाविंश्यां च श्रुतौ क्रमात् ॥ २२ ॥
षड्जादीनां स्थितिः प्रोक्ता प्रथमा भरतादिभिः ।
असपाः पूर्वपूर्वस्मात्संचरंत्युत्तरोत्तरम् ॥ २३ ॥
त्रिस्त्रिर्गतीस्ते प्रत्येकं याति गश्च चतुर्गतीः ।
यद्यद्रागोपयोगः स्यात्तत्तदिच्छा गतिर्भवेत् ॥ २४ ॥
साधारणः कैशिकी चान्तरकाकलिनौ तथा ।
साधारणः कैशिकी द्वौ क्रमाद्गतिगनिक्रमः ॥ २५ ॥
ऊर्ध्वखलस्तु गांधारो मध्यमोपरि संस्थितः ।
मस्य त्रिगतिभेदाश्च मनुः पक्षान्तिको नृपः ॥ २६ ॥
अद्य कैशिकि नावाद्यादुक्षखलौ द्वितीयकः । (?)
अत्युछंखलनामानौ तृतीयगतिकौ रिधौ ॥ २७ ॥
इत्येवं स्वरभेदाश्च स्थाने स्थाने भवन्ति हि ॥
मयूरचातकछागक्रौंचकोकिलदर्दुराः ।
गंजश्च सप्तषड्जादीन् क्रमादुच्चारयन्त्यमी ॥ २८ ॥
चतुर्विधाः स्वरा वादी संवादीच विवाद्यपि ।
अनुवादी तु वादी तु प्रयोगे बहुलः स्वरः ॥ २९ ॥
अंशः स्थायीति पर्यायो रागोत्पादनहेतुकः ।
श्रुतयो द्वादशाष्टौ वा ययोरन्तरगोचराः ॥ ३० ॥
मिथः संवादिनौ तौ स्तो गत्यादेश्च विभागतः ।
एकश्रुत्यन्तरौ यौ कौ तौ मिथः प्रतिवादिनौ ॥ ३१ ॥
शेषाणामनुवादित्वं ज्ञेयमन्वर्थतः क्रमात् ।
ग्रहांशन्यासापन्यासा इति भेदास्तथा पुनः ॥ ३२ ॥
गीतारभ्यो ग्रहः प्रोक्त अंशो जीवोऽपि व्यापकः ।
गीते समाप्तिकृन्न्यास अपन्यासः स उच्यते ॥ ३३ ॥

विदारीवानपन्यासो विदारी छेदको मुहुः ।
सर्वत्र रागतस्त्वेते स्वरभेदा भवन्ति हि ॥ ३४ ॥

हतिः श्रुतिस्ततो लग्नजातोऽनुरणनध्वनिः ।
भावी दीप्तः श्रोतृचित्तं स्वतो रंजयतिः स्वरः ॥ ३५ ॥

इति स्वराः ।

स्वराणां निचयो ग्रामो मूर्छनादिसमाश्रितः ।
त्रिधा स कथितो भेदात् समध्यमगाख्यया ॥ ३६ ॥

षड्जग्रामः षड्जकस्य संवादी पंचमोऽचलः ।
पंचमो नृपसंस्थश्चेन्मध्यमग्रामकश्च सः ॥ ३७ ॥

स्वस्वपूर्वापरस्वरश्रुतिस्थौ युग्मके गनी ।
गांधारग्रामकः ख्यातः शार्ङ्गदेवेन सूरिणा ॥ ३८ ॥

षड्जग्रामाश्रितान् रागान् सर्वे गायन्ति गायकाः ।
तस्मान्मुख्यतमः षड्जग्राम एव नचापरौ ॥ ३९ ॥

गन्योः स्थाने रिधौ यत्र लघुषड्जपयोर्निमौ ।
गांधारो मध्यमस्थाने गग्रामो याष्टिके मतः ॥ ४० ॥

न्यासग्रहांशेषु च पूर्णतायाः ।
मथ श्रुतौ षाडवऔडुवेऽपि ॥
सर्वत्र देशीगतरागवृंदे ।
श्रीमद्धनूमान्नियमं न वव्रे ॥ ४१ ॥

इति ग्रामाः ।

क्रमात्स्वराणां सप्तानामारोहे चावरोहणे ।
रागः संमूर्छ्यते यत्र श्रोता वा मूर्छना मता ॥ ४२ ॥

ताः सप्त मध्यषड्जेन मूर्छनारभ्यतेऽग्रिमा ।
अधस्तनैर्निषादाद्यैः षड्जस्थानस्थितैः क्रमात् ॥ ४३ ॥

षडन्या मूर्छनाः सादींस्तदूर्ध्वं सारयेत्क्रमात् ।
यस्यां यावतिथः षड्जस्तावत्तिथ्येव मूर्छना ॥ ४४ ॥
आद्या चोत्तरमंद्राच रजनी चोत्तरायता ।
शुद्धषड्जा मत्सरीकृताश्वक्रांताभिरुद्गता ॥ ४५ ॥
नामान्येतानि मुनिभिर्मूर्छनानां यथाक्रमम् ॥

इति मूर्छनाः ।

तानाः स्युर्मूर्छनाः शुद्धाः षाडवौडुविती कृताः ।
षट्स्वरैः षाडवाः प्रोक्तास्त्वौडुवाः पंचभिः स्वरैः ॥ ४६ ॥
शुद्धताना इति ख्याताः पूर्णास्तानक्रियात्मकाः ।
द्विविधा तानाक्रिया तंत्र्यां प्रवेशान्निग्रहात्तथा ॥ ४७ ॥
प्रवेशः परसादृश्यमीषत्स्पर्शस्तु निग्रहः ।
असंपूर्णाश्च संपूर्णा व्युत्क्रमोच्चारिताः स्वराः ॥ ४८ ॥
मूर्छनाः कूटतानाः स्युस्तज्ज्ञानोपाय उच्यते ।
प्रस्तार संख्ये नष्टं वोद्दिष्टमित्यथ लक्षणम् ॥ ४९ ॥
कंचित्क्रमं विलिख्यादौ पूर्वपूर्वः परादधः ।
स्वरः स्थाप्यः स चेदग्रे तत्तत्पूर्वस्वरो भवेत् ॥ ५० ॥
प्रस्तारो वामतः कार्यः पुरस्तूपरिवर्तिनः ।
मूलक्रमक्रमात्पृष्ठे शिष्टान् प्रस्तार ईदृशः ॥ ५१ ॥
क्रमात्पूर्वस्वरस्थाङ्कसंख्यांत्यादिस्वराविलम् ।
अंत्यादधोधो विलिखेत्कृतं त्यक्त्वा क्रमो भवेत् ॥ ५२ ॥
यदैकस्वरतश्चांत्योपांत्यस्वरास्ततोऽन्यथा ।
मालाप्रस्तारक इति विठ्ठलेन प्रकीर्तितः ॥ ५३ ॥

इति प्रस्तारः ।

अंकानेकादि सप्तान्तानूर्ध्वमूर्ध्वं लिखेत्क्रमात् ।
हते पूर्वेण पूर्वेणांकेनांकं परं परम् ॥ ५४ ॥

एकस्वरादि तानानां संख्या संजायते स्फुटम् ॥

इति संख्या।

मूर्छनांत्यस्वरस्थांकाः प्रश्नांकैः पातयेत्तु तान्।
शेषान्प्राक्प्राक्स्वरस्थांकैर्यथाहननसंभवैः ॥ ५५ ॥
क्रमेण पातयेद्येनाहतिस्तावतिथः स्वरः।
हतेरभावतः किंतु कोऽपि पूर्वस्थितः स्वरः ॥ ५६ ॥
स्याद्द्वितीयाद्गणनं नष्टसिद्धिर्भवेत्तदा ॥

इति नष्टम्।

नष्टबोधगता येंऽकास्तानन्त्यांकेषु पातयेत्।
शिष्टउद्दिष्टसिद्धिः स्यादित्यभाषत विठ्ठलः ॥ ५७ ॥

इत्युद्दिष्टम्।

गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः।
स्थाय्यारोह्यवरोही च संचारीत्यथ लक्षणम् ॥ ५८ ॥
स्थित्वा स्थित्वा प्रयोगः स्यादेकस्यैव स्वरस्य यः।
स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ ॥ ५९ ॥
एतत्संमिश्रणाद्वर्णः संचारी परिकीर्तितः ॥

इति वर्णाः।

विशिष्टवर्णसंदर्भमलंकारं प्रचक्षते।
तस्य भेदा बहुतरा योजनीया विचक्षणैः ॥ ६० ॥

इति अलंकाराः।

गमकः स्वरकंपः स्यात् श्रोतृहृदयरंजकः ॥

इति गमकाः।

ग्रहांशतारमंद्रादि पूर्णापूर्णविवेकतः।
वैचित्र्ययुक्ता गमकैरालप्तिः कथिता बुधैः ॥ ६१ ॥

न्यासादिस्थानमुज्झित्वा मध्येऽमध्येऽल्पता युजाम् ।
स्वराणां या विचित्रत्वकारिण्यंशादि संगतिः ॥ ६२ ॥

अनभ्यासैः क्वचित्क्वापि लंघनैरेव केवलैः ।
कृतालप्तिर्मार्गैः स्यात्ताने ताने प्रयोगतः ॥ ६३ ॥

इति आलप्तिः ।

उक्तपूर्वस्वरगतिमेलाः स्यू रागसंभवाः ।
रागा अनंतकास्तस्माद्रागव्यक्तिस्तु वीणया ॥ ६४ ॥

इमां काष्ठमयीं वीणां वावदूकयितुं मया ।
क्रियतेऽत्र स्वरगतिः कियज्ज्ञांगमवीणिकाम् ॥ ६५ ॥

एकद्वित्र्यंकसांख्येन त्वेकद्वित्रिगतिस्वरः ।
प्रस्तारो नियतः कार्यो व्यस्ताव्यस्तक्रमात्क्रमः ॥ ६६ ॥

पूर्वापरस्वरस्थानं किंतु नैकत्र कारयेत् ।
विवादी तु सदा त्याज्यः क्वचित्तानाक्रियात्मकः ॥ ६७ ॥

काकल्यंतरयोः स्थाने तृतीयगतिकौ निगौ ।
प्रयोगे च प्रतिनिधी क्रियेते सांप्रदायिकैः ॥ ६८ ॥

स्वल्पप्रयोगः सर्वत्र काकली चांतरस्वरः ।
रत्नाकरेऽपि चेत्युक्तः शार्ङ्गदेवेन सूरिणा ॥ ६९ ॥

इति स्वराध्यायः ।

---

## अथ रागाध्यायः ।

एकैकमेळतो रागा बहवः संभवन्ति हि ।
तेषामगाधरूपत्वात् संख्यां कर्तुं न शक्यते ॥ ७० ॥

इतस्ततश्च संमथ्य विठ्ठलेनाखिलान् स्वरान् ।
विज्ञानतो किलात्मानं स्फूर्जयत्यग्रतो विधेः ॥ ७१ ॥

अधुनेत्युक्तमेलेभ्यः प्रसिद्धाः कतिचिद् ब्रुवे ।
मुखारी सोमरागश्च टोडी गौडी वराटिका ॥ ७२ ॥
केदारः शुद्धनाटश्च देशाक्षी देशिकारकः ।
सारंगाहेरिकल्याणकामोदाश्च हिजेजिकः ॥ ७३ ॥
नादरामक्रिहिंदोलौ कर्णाटश्च हमीरकः ।
मालवकैशिकोऽतश्च श्रीरागश्चेत्यनुक्रमात् ॥ ७४ ॥
एतेषां मेलसंजातरागाणां च यथाक्रमम् ।
लक्षणं वक्ष्यते किंतु लोकवृत्तानुसारतः ॥ ७५ ॥

## अथ मेलाः

### ( १ ) अथ मुखारीमेलः ।

मुखारी मेलतोऽन्येऽपि मुखार्याद्या भवन्ति हि ।
सप्तस्वराः स्वभावाश्च मुखारीमेलको भवेत् ॥
सदा मुखारिका गायेत् सत्रिका पूर्णरूपिका ॥

इति मुखारी ॥ १ ॥

इति मुखारीमेलः ।

---

### ( २ ) अथ सोमरागमेलः ।

निरेकगतिकः सोममेलः सदाशिवप्रियः ।
अमुष्मादपिकेचित्तु रागाऽनंता भवन्ति हि ॥
सत्रिकः सोमरागः स्यात्सदाकाले शिवप्रियः ॥

इति सोमरागः ॥ २ ॥

इति सोमरागमेलः ।

---

### ( ३ ) अथ टोडीमेलः ।

टोडीमेलः प्रसिद्धः स्यादेकैकगतिकौ गनी ।

मेलादतष्टोडिका च शुद्धभैरवकादयः ॥
मत्रिका पधकंपाद्या पूर्णा टोडी प्रभातिका ॥

इति टोडी ॥ ३ ॥

सत्रिको रिविहीनश्च प्रभाते शुद्धभैरवः ॥

इति शुद्धभैरवः ॥ ४ ॥

इति टोडीमेलः ।

---

## ( ४ ) अथ गौडीमेलः ।

निगौ तृतीयगतिकौ गौडीमेलः प्रकीर्तितः ।
गौडीकर्णाटबंगालौ गुर्जरी बहुली तथा ॥
आसावरी रामकली मारुर्गुणकरी तथा ।
टक्कश्च शुद्धललितः पंचमः पटमंजरी ॥
मालवगौडकः पूर्वी भैरवौ पाडिकाह्वतः ।
धगत्यक्ता सत्रिका च सायं गौडी विराजते ॥

इति गौडी ॥ ५ ॥

गत्रिः कर्णाटबंगालो रिहीनः प्रातरेव हि ॥

इति कर्णाटबंगालः ॥ ६ ॥

रित्रिका पेन हीना वा गुर्जरी प्रातरिष्टदा ॥

इति गुर्जरी ॥ ७ ॥

मत्रिका गनिहीना वा बहुली गेयापराह्णतः ॥

इति बहुली ॥ ८ ॥

मत्रिकासावरी पूर्णा सदा गेयातिकारुणा ॥

इत्यासावरी ॥ ९ ॥

सत्री रामकली पूर्णा सदा गेया विरागिणी ॥

इति रामकली ॥ १० ॥

सत्रिका रिधहीना च सदा मारुः प्रकाशते ॥

इति मारुः ॥ ११ ॥

संपूर्णा स्याद्गुणकरी सायं स्फुरितपंचमा ॥

इति गुणकरी ॥ १२ ॥

सायं स्यात्सत्रिकष्टक्कः काकल्यंतरराजितः ॥

इति टक्कः ॥ १३ ॥

पहीनः सत्रिकः शुद्धललितः प्रातरिष्टदः ॥

इति शुद्धललितः ॥ १४ ॥

रिहीनः पत्रिकः प्रातः पंचमः परिशोभते ॥

इति पंचमः ॥ १५ ॥

सर्वदा पत्रिका पूर्णा राजते पटमंजरी ॥

इति पटमंजरी ॥ १६ ॥

नित्रिको रिपहीनो वा सायं मालवगौडकः ॥

इति मालवगौडः ॥ १७ ॥

संपूर्णा सत्रिका पूर्वी सायंकाले विराजते ॥

इति पूर्वी ॥ १८ ॥

सत्रिका रिपमुद्रा च पूर्णा भैरविका सदा ॥

इति भैरवी ॥ १९ ॥

सत्रिका धगहीनारोहावरोहेण संयुता ।
सायंकाले च गातव्या पाडी शृंगारवल्लभा ॥

इति पाडी ॥ २० ॥

इति गौडीमेलः ।

---

( ५ ) अथ वराटीमेलः ।

निमौ तृतीयगतिकौ वराटीमेल एव सः ।
अस्माद्वराटी श्यामादिवराट्याद्यास्त्वनेकशः ॥
सत्रिः श्यामवराटी च पूर्णा काकलिराजिता ॥

इति श्यामवराटी ॥ २१ ॥

शुद्धवराटिका सत्रिः सदा पूर्णा मनोहरा ॥

इति शुद्धवराटी ॥ २२ ॥

इति वराटीमेलः ।

---

( ६ ) अथ केदारमेलः ।

रिधौ द्वितीयगतिकौ तृतीयगतिकौ निगौ ।
एष केदारमेलः स्यादतो जाताश्च रागकाः ॥
केदारगौंडमल्हारनटनारायणास्ततः ।
वेलावली च भूपाली कांबोजी मधुमाधवी ॥
शंकराभरणः सावेरी सुहवी नारायणी ततः ।
केदारनाटश्चान्येऽपि रागाः स्युरेतन्मेलतः ॥
नित्री रिपोनः केदारो निशीथे करुणप्रियः ॥

इति केदारः ॥ २३ ॥

धत्रिः प्रभाते गौंडःस्यात्संपूर्णः शंकरप्रियः ॥

इति गौंडः ॥ २४ ॥

धत्रिः सपाभ्यां हीनोऽयं मल्हारोऽप्युषासि प्रियः ॥

इति मल्हारः ॥ २५ ॥

नटनारायणो रागः काकल्यंतरराजितः ।
संपूर्णः सततं सत्रिर्वर्षाकालेऽतिवल्लभः ॥

इति नटनारायणः ॥ २६ ॥

धत्रिका रिपहीना वा प्रातर्वेलावलीष्टदा ॥

इति वेलावली ॥ २७ ॥

मत्रिर्निगाभ्यां हीना च भूपाली प्रातरुत्तमा ॥

इति भूपाली ॥ २८ ॥

कांबोजी मनिहीना वा सत्रिः सांतरकाकली ॥

इति कांबोजी ॥ २९ ॥

मत्रिः प्रातरसौ गेया रिधास्ता मधुमाधवी ॥

इति मधुमाधवी ॥ ३० ॥

शंकराभरणः सत्रिः प्रातः संपूर्णमुद्रितः ॥

इति शंकराभरणः ॥ ३१ ॥

सपत्रर्ज्या च सावेरी धत्रिका प्रातरिष्टदा ॥

इति सावेरी ॥ ३२ ॥

धत्रिः पूर्णा च सुहवी प्रातःकाले सुखप्रदा ॥

इति सुहवी ॥ ३३ ॥

नारायणी गत्रिका च संपूर्णाप्युषसि प्रिया ॥

इति नारायणी ॥ ३४ ॥

केदारनाटकः सत्रिः संपूर्णः सायमीप्सितः ॥

इति केदारनाटः ॥ ३५ ॥

इति केदारमेलः ।

---

## ( ७ ) अथ शुद्धनाटमेलः ।

तृतीयगतिकौ शुद्धनाटमेले रिधौ गनी ।
अस्मिन्मेले संभवन्ति शुद्धनाटादिकाः परे ॥
सत्रिकः शुद्धनाटोऽसौ सायं गंभीरनादवान् ॥

इति शुद्धनाटः ॥ ३६ ॥

इति शुद्धनाटमेलः ।

---

## ( ८ ) अथ देशाक्षीमेलः ।

तृतीयगतिका निगौ रिश्च देशाक्षिमेलकः ।
अतोऽपि मेलाद्देशाक्षी प्रमुखाद्या भवन्ति च ॥
गत्री रिहीना देशाक्षी प्रातर्गेया विचक्षणैः ॥

इति देशाक्षी ॥ ३७ ॥

इति देशाक्षीमेलः ।

---

## ( ९ ) अथ देशिकारमेलः ।

तृतीयगतिनिगमा देशिकारस्य मेलकः ।
देशिकारस्तिरवणी देशी ललितदीपकौ ॥
विभासाद्यादि केचित्तु संभवन्त्यत्र मेलतः ।
देशिकारोऽपराह्ने स्यात्सत्रिः संपूर्णको भवेत् ॥

इति देशिकारः ॥ ३८ ॥

संपूर्णा सत्रिका गेया सायंकाले च त्रावणी ॥

इति त्रावणी ॥ ३९ ॥

पहीना रित्रिधा देशी सदा गेया विचक्षणैः ॥

इति देशी ॥ ४० ॥

धत्रिः संपूर्णललितः प्रातर्गेयश्च गायकैः ॥

इति ललितः ॥ ४१ ॥

संध्याकाले च गातव्यः धत्रिः संपूर्णदीपकः ॥

इति दीपकः ॥ ४२ ॥

विभासः सत्रिकः पूर्णोऽपोवा स्यात्प्रातरेवहि ॥

इति विभासः ॥ ४३ ॥

इति देशिकारमेलः ।

---

## ( १० ) अथ सारंगमेलः ।

तृतीयगतिमनिधा द्वितीयगतिकोऽपि रिः ।
तुरीयगतिको गश्च मेलः सारंगनामकः ॥
मेलादतोऽपि सारंगप्रमुखाद्या भवन्ति हि ।
सत्रिः संपूर्णः सारंगः सदागेयः पराह्नतः ॥

इति सारंगः ॥ ४४ ॥

इति सारंगमेलः ।

---

## ( ११ ) अथ आहेरीमेलः ।

एकतृतीयगतिकौ गनिस्वरौ यथाक्रमम् ।
द्वितीयगतिको रिश्च त्वाहेरीमेल एवहि ॥
आहेरीमेलतोऽन्येऽपि आहेर्याद्या ह्यनेकशः ।
सत्रिका सायमाहेरी संपूर्णादिरसाश्रिता ॥

इति आहेरी ॥ ४५ ॥

इति आहेरीमेलः ।

---

## ( १२ ) अथ कल्याणमेलः ।

मनी तृतीयगतिकौ द्वितीयगतिकोऽपि रिः ।
तृतीयगतिको गश्च एष कल्याणमेलकः ॥
अतोऽपि मेलात्कल्याणप्रमुखाद्या भवन्ति हि ।
सत्रिः संपूर्णः कल्याणः सायंकाले महारुचिः ॥

इति कल्याणः ॥ ४६ ॥

इति कल्याणमेलः ।

---

## ( १३ ) अथ कामोदमेलः ।

निगावेकैकगतिकौ तृतीयगतिकोऽपि मः ।
एष कामोदमेलः स्यादस्मादन्यतराः परे ॥
सत्रिः संपूर्णः कामोदो गायेत्तुरीययामतः ॥

इति कामोदः ॥ ४७ ॥

इति कामोदमेलः ।

---

## ( १४ ) अथ हिजेजमेलः ।

गनी ह्येकगती यत्र हिजेजाख्यस्य मेलकः ।

मेलादतो हिजेजश्च भैरवाद्या ह्यनेकशः ॥
हिजेजः सर्वदा पूर्णो नित्रिः सांतरकाकली ॥

इति हिजेजः ॥ ४८ ॥

रिहीनो भैरवः सत्रिः प्रातर्गेयो विशुद्धधीः ॥

इति अपरभैरवः ॥ ४९ ॥

इति हिजेजमेलः ।

---

## ( १५ ) अथ नादरामक्रीमेलः ।

निगौ एकगती मेलो नादरामक्रिया च सः ।
मेलादतो नादरामक्र्याद्याश्च कतिचिद्भवेत् ॥
सत्रिः सायं च संपूर्णा नादरामक्रिया भवेत् ॥

इति नादरामक्री ॥ ५० ॥

इति नादरामक्रीमेलः ।

---

## ( १६ ) अथ हिंदोलमेलः ।

द्वितीयगतिको रिश्च त्वेकैकगतिकौ गनी ।
तदा हिंदोलमेलः स्यादतो हिंदोलरागकः ॥
वसंतरागादन्येऽपि केचित्केचिद्भवन्ति हि ।
हिंदोलको रिपत्यक्तः सत्रिकः प्रातरेव हि ॥

इति हिंदोलः ॥ ५१ ॥

सत्रिर्वसंतः संपूर्णः प्रातर्गेयोऽप्यनंगदः ॥

इति वसंतः ॥ ५२ ॥

इति हिंदोलमेलः ।

---

## ( १७ ) कर्णाटमेलः ।

तृतीयगतिगनिधा द्वितीयगतिकोऽपि रिः ।
तदा कर्णाटमेलः स्यात् तत्र संभूतरागकाः ॥
कर्णाटरागः सामंतः सौराष्ट्री छायनाटकः ।
शुद्धबंगालतौरुष्कतोडिकाद्या ह्यनेकशः ॥
नित्री रिधाभ्यां हीनो वा कर्णाटः सायमिष्टदः ॥

इति कर्णाटः ॥ ५४ ॥

सामंतस्त्रिसः सायं काकल्यंतरभूषितः ॥

इति सामंतः ॥ ५५ ॥

सत्रिः सायं च सौराष्ट्री पूर्णा शृंगारवल्लभा ॥

इति सौराष्ट्री ॥ ५६ ॥

छायानाटस्त्रिसः सायं काकल्यंतरजीवनः ॥

इति छायानाटः ॥ ५७ ॥

नित्रिकः शुद्धबंगालः संपूर्णोऽप्युषसि प्रियः ॥

इति शुद्धबंगालः ॥ ५८ ॥

तुरुष्कतोडिका मत्रिः पूर्णा पंचमकंपिता ।
मन्याहताप्युषःकाले गेया सम्यक् विचक्षणैः ॥

इति तुरुष्कतोडी ॥ ५९ ॥

इति कर्णाटमेलः ।

---

## ( १८ ) अथ हमीरमेलः ।

द्वितीयगतिको रिश्च तृतीयगतिकौ निगौ ।
हमीरमेल एषः स्याद्धमीराद्या ह्यनेकशः ॥

सत्रिस्तृतीययामे च हमीरः पूर्ण ईरितः ।

इति हमीरः ॥ ६० ॥

इति हमीरमेलः ।

## ( १९ ) अथ मालवकैशिकमेलः ।

एकैकगतिकौ रिधौ निगौ मालवकैशिके ।
अस्मिन्मेले मालवश्रीर्धन्नासी सैंधवी तथा ।
देवगांधार इत्याद्या रागा भवन्त्यनेकशः ॥
सत्रिः सायं च रसिको मालवकैशिकोऽधगः ॥

इति मालवकैशिकः ॥ ६१ ॥

रिधाल्पा सत्रिका पूर्णा मालवश्रीः सदारुचिः ।

इति मालवश्रीः ॥ ६२ ॥

सत्रिका रिधवर्ज्या च धन्नासी प्रातरेव हि ॥

इति धन्नासी ॥ ६३ ॥

सत्रिका त्वरिपा नित्यं सैंधवी गमकैर्युता ।

इति सैंधवी ॥ ६४ ॥

संपूर्णः सत्रिको देवगांधारः सर्वदा रुचिः ॥

इति देवगांधारः ॥ ६५ ॥

इति मालवकैशिकमेलः ।

---

## ( २० ) अथ श्रीरागमेलः ।

धरिन्येकैकगतिका गस्तृतीयगतिर्यदा ।

श्रीरागमेल एषः स्यात् श्रीरागाद्या ह्यनेकशः ॥
श्रीरागः सत्रिकः सायं धगोनः श्रीरसप्रियः ॥

इति श्रीरागः ॥ ६६ ॥

इति श्रीरागमेलः। मालकौंश

---

इत्याद्यनंतरागाश्च पूर्वोक्तगतिमेलतः ।
अमुना चाध्वना सम्यक् योजनीया विचक्षणैः ॥
अन्येऽपि पारसीकेया रागाः परदनामकाः ।
संपूर्णाः सर्वगमकाः काकल्यंतरिताः सदा ॥
रहायी देवगांधारे (१) कानरे च निशाबरः (२) ।
सारंगे माहुरो नाम (३) जंगूलोऽथ बंगालके (४) ॥
देश्यामाहंगको नाम (५) बारा मल्हाररागके (६) ।
केदारेऽपि च सूहाथ (७) धनास्यां च इरायका (८) ॥
जिजावन्त्यां च हौसेनी (९) मालवे मुसलीककः (१०) ।
कल्याणे यमनो गायेत् (११) सर्पर्दोऽथ बिलावले (१२)॥
देशिकारे बाखरेजः (१३) आसावर्यां हिजेजकः (१४) ।
देवगैर्यां मुशकाख्यः (१५) एवमन्येऽपि योजयेत् ॥

बहुरसमकरंदा सच्चिदानंदकंदा ।
अविमुकुलितयासां किंनरीरागराशी ॥
वरनररतिमोदा कामिनां श्रीविनोदा ।
जनधरश्रुतिचूडा मंजरीरागचूडा ॥ १ ॥

देमकजननीनिजसुतविठ्ठलकृतरागमंजरीकेयम् ।
सुंदररक्तिनिवेशितवाग्देवी श्रवणमंडना भवतु ॥ २ ॥

संगीतार्णवमंदिरः प्रतिदिनं साहित्यपद्माकरः ।
प्रोद्भूतप्रबलप्रबोधजनको भासां निधिः सांप्रतम् ॥
विद्यावादविनोदिनामतितरामग्रेसरः केसरी ।
सोऽयं माधवसिंहराजतिलको जीयाच्चिरं भूतले ॥ ३ ॥

इति कर्णाटजातीयपुंडरीकविठ्ठलकृता
रागमंजरी समाप्ता ।
॥ शुभं भवतु ॥

# संगीतोपयोगी ग्रंथमालिका.

१. श्रीमल्लक्ष्यसंगीतम् ... ... ( संस्कृत )
२. श्रीमद्रागकल्पद्रुमांकुरः ... ... ( ,, )
३. रागचंद्रिका ... ... ... ( ,, )
४. अष्टोत्तरशततालक्षणम् ... ( ,, )
५. संगीतसारामृतोद्धारः ... ... ( ,, )
६. सद्रागचंद्रोदयः ... ... ( ,, )
७. अभिनवतालमंजरी ... ... ( ,, )
८. रागलक्षणम् ... ... ... ( ,, )
९. चत्वारिंशच्छतरागनिरूपणम् ... ( ,, )
१०. रागमाला ... ... ... ( ,, )
११. संगीतसुधाकरः ... ... ( ,, )
१२. स्वरमेलकलानिधिः ( मराठी भाषांतरासह )
१३. संगीतदर्पणम् ... ( गुजराथी भाषांतरासह )
१४. संगीतरत्नाकरः ... ( ,, ,, )
१५. स्वरमालिका ... ( ,, ,, )
१६. रागविबोधप्रवेशिका .... ... ( मराठींत )
१७. पारिजातप्रवेशिका ... ... ( ,, )
१८. गीतमालिका. ( भाग १-९ हिंदी भाषेंत )
१९. हिंदुस्थानी संगीतपद्धति ( भाग १ मराठींत )
२०. हिंदुस्थानी संगीतपद्धति ( भाग २ मराठींत )
२१. हिंदुस्थानी संगीतपद्धति ( भाग ३ मराठींत )
२२. हिंदुस्थानी संगीतपद्धति ( भाग १ गुजराथींत )
२३. रागचंद्रिकासार ... ... ( हिंदींत )
२४. { हृदयकौतुकम् ... ... ( संस्कृत )
हृदयप्रकाशः... ... ... ( ,, ) }

पत्रव्यवहार खालील पत्त्यावर करावा.

पत्ताः-भालचंद्र सीताराम सुकथनकर, एम्. ए., एल्‌. एल्‌. बी.
२ मलबार हिल, मुंबई.

॥ श्रीः ॥

श्रीपुंडरीकविठ्ठलविरचिता

# रागमंजरी ।

एतत्पुस्तकम्

पुण्यपत्तनस्थपंडितदत्तात्रेयकेशवजोशीत्यभिधेन यथामति

संशोधितम् ।

तच्च

## भालचन्द्रशर्मणा

आर्यभूषणाख्यमुद्रालये मुद्राक्षरैरंकयित्वा

प्राकाश्यं नीतम् ।

शाकः १८४० सन् १९१८

4-2

अस्य ग्रन्थस्य मुद्रणे यद्धनमपेक्षितं तत्सकलमपि
श्रीमन्महीशूरयुवराजमहाशयैः ' सर के. नरसिंह-
राज वडियार जी. सी. आय्. ई. '
इति लक्षणांकितैः परमो-
दारचरितैरदायि ।

Printed at the Arya-Bhushan Press, Poona,
by Anant Vinayak Patvardhan,

AND

Published by Bhalchandra Sitaram Sukthankar, M. A. LL. B.,
at 2 Malabar Hill, Bombay.

# प्रस्तावना.

पंडित पुंडरीकविठ्ठलानें संगीतावर संस्कृतांत चार ग्रंथ लिहिले आहेत, ते असेः– सद्रागचंद्रोदय, रागमंजरी, रागमाला व नृत्यानिर्णय.

सद्रागचंद्रोदयाचे शेवटीं ग्रंथकारानें आपलें राहण्याचें ठिकाण व आपल्या वाडवडिलांची माहिती दिलीच आहे.

ग्रंथारंभीं खानदेशांतील फरकी घराण्याचें वर्णन करून अहंमदखान, ताजखान व बुरहाणखान या राजांचीं नांवें त्यानें दाखल केलीं आहेत व आनंदवल्ली त्यांची राजधानी होती, असेंही म्हटलें आहे. खानदेशांत फरकी घराणें इ. स. १३७० पासून १६०० पर्यंत राज्य करीत होतें असा इतिहासांत दाखला सांपडतो. पुढें अकबर बादशाहानें आपले सुभेदार पाठवून तो देश आपल्या राज्यास जोडल्यामुळें तें घराणें नामशेष झालें असावें असा इतिहासज्ञांचा तर्क आहे.

पुंडरीकविठ्ठलानें सद्रागचंद्रोदय ग्रंथ लिहिला त्यावेळीं तो बुरहानखानाच्या पदरीं होता.

रागमंजरी ग्रंथाच्या आरंभीं त्यानें अकबरबादशहाच्या पदरीं असणाऱ्या राजा भगवानदासाचे पुत्र राजा माधवसिंह व राजा मानसिंह यांची स्तुति केली आहे; यावरून तो त्या वेळीं त्यांच्या पदरीं असावा असें दिसतें.

रागमंजरी ग्रंथ जेव्हां पुंडरीकानें लिहिला तेव्हां प्रचारांत कांहीं मुसलमानी रागही त्याच्या दृष्टीस पडले, त्यांच्याशीं समप्रकृतिक संस्कृत कोणते राग होत असत याचेंही दिग्दर्शन थोडक्यांत त्यानें आपल्या ग्रंथांत युक्तीनें करून दाखविलें आहे; तो भाग खराच मनोरंजक आहे.

रागमाला ग्रंथाचा एक विशेष असा आहे कीं, ग्रंथकारानें मागील दोन ग्रंथांप्रमाणें मेळपद्धति न स्वीकारितां राग व त्यांच्या भार्यापुत्र असें वर्गीकरण करून दाखविण्याचा प्रयत्न केला तोही मार्मिक झाला आहे. ही पद्धति बहुधा दक्षिणेकडे दिसत नाहीं. फार दिवस उत्तर हिंदुस्थानांत राहिल्यानें तिकडील ग्रंथकार व संगीतवेत्ते यांचा परिचय अधिक झाल्यामुळें त्यानें हें वर्गीकरण करून दाखविलें असावें असें आम्हांस वाटतें. त्याच्या या वर्गीकरणांत समंजसतत्त्व आहे हें खोटें नाहीं.

चवथा ग्रंथ जो नृत्यनिर्णय तो त्यानें लिहिला त्यावेळीं तो अकबरबादशाहाच्या पदरीं होता असें त्या ग्रंथारंभींच्या श्लोकांवरून स्पष्ट दिसून येतें.

एकंदरींत पाहतां पंडित पुंडरीकविठ्ठल हा सोळाव्या शतकाच्या उत्तरार्धांत होता असें वरील साऱ्या पुराव्यावरून दिसून येईल. उत्तरेच्या संगीतावर लिहितांना त्याच्या प्रांतांत प्रचलित असलेला शुद्धस्वर मेळच त्यानें आपल्या ग्रंथांत ठेविला आहे. ग्रंथाची भाषा प्रौढ व विवेचनपद्धति तारिफ करण्यासारखी आहे. उत्तरेच्या रागांस दक्षिणेची जन्यजनकपद्धति लावून त्यांचें जें त्यानें वर्गीकरण केलें आहे, त्यांत खरोखर त्याचें चातुर्य दिसून येतें.

सद्रागचंद्रोदय व रागमाला हे दोन ग्रंथ पूर्वींच छापून प्रसिद्ध झाले आहेत.

रागमंजरी या ग्रंथाची हस्तलिखितप्रत बिकानेरच्या महाराजांच्या पुस्तकालयांत आहे; ती पाहण्याचा सुयोग आमचे मित्र डॉ. विष्णु सीताराम सुकथनकर एम्. ए. पीएच्. डी. आसिस्टंट सुपरिंटेंडेंट अर्क्यालॉजिकलसर्वे, यांच्यामार्फत आम्हांस आला त्याबद्दल, व ग्रंथकाराचा कालनिर्णय करण्याचे कामीं त्यांनीं जें आम्हांस साहाय्य केलें त्याबद्दल आम्हीं त्यांचे फार आभारी आहों.

पुणे,
ता० २२।६।१८ } पं. दत्तात्रेय केशव जोशी.

45

॥ श्रीः ॥

# रागमंजरी ।

श्रीगणेशाय नमः

श्रीमत्कच्छपवंशदीपकमहाराजाधिराजेश्वरः ।
तेजःपुंजमहाप्रतापनिकरो भानुः क्षितौ राजते ॥
तस्यासीद्भगवंतदासतनयो वीराधिवीरेश्वरः ।
क्षोणीमंडलमण्डनो विजयते भूमंडलाखंडलः ॥ १ ॥
तस्य द्वौ तनयौ प्रभूतविनयौ शूरौ महाधार्मिकौ ।
जातौ पंक्तिरथात्मजौत्वकवरक्षोणीपतेः स्वौ भुजौ ॥
सिंहौ माधवमानपूर्वपदकौ संग्रामदक्षावुभौ ।
तेजत्यागसहस्रहस्तकलितौ श्रीसर्वभूमीश्वरौ ॥ २ ॥
अकबरनृपधर्मी शक्रतश्चातिभीमो ।
धरणिगगनमध्ये जंगमो मध्यमेरुः ॥
सकलनृपतितारा चंद्रसूराविमौ द्वौ ।
जगतिजयनशीलौ माधवामानसिंहौ ॥ ३ ॥
तयोर्माधवसिंहोऽयं राजा परमवैष्णवः ।
सर्वदा विष्णुभक्त्यर्थं नाट्यारंभं करोति हि ॥ ४ ॥
अनेककोटिब्रह्मांडनायक । द्रौपदीलज्जानिवारक ।
बहुरूपधारक । पारिजातापहारक । दुष्टभंजक ।
शिष्टपालक । गोपीजनवस्त्रापहारक । गोवर्धनोद्धारक ।
देवकीनंदन । यशोदानंदवर्धन । शकटभंजन ।
कंसचाणूरमर्दन । नंदनंदन । भक्तवत्सल । सच्चिदानंदविग्रह ।

वदान्तवेद्यस्य भक्त्युत्पादनसाधनाय, नृणां कर्मकौतूहलाय, सामाजिकानां मनश्चमत्काराय, नाट्यारंभमेलनं मेलयति। वांशिकवंशमुखोद्गीर्णदेवगांधाररागसरिगमप्रमाण-प्रेंखोलितश्रोत्ररमणीये। कांस्यतालरंजकमृदंगध्वनिरण-रणितविपंचीवानिशंगर्भितसौंदर्ये। आलापिनीश्रुतिसं-धानत्रिस्थानप्रौढिदशविधरागनानागमकविचित्ररागा-लापनतालवैचित्र्यमेलापकगणगंधर्वगायनगीते श्रूयमाणे सति।

राजा—

शुष्कांगी घनचार्वांगी काकली तव किन्नरी।
वर्द्धमानोल्लसद्रागं विवादयति तत्कथम्॥ ५॥
नानापंडितमंडिता सुरसभा श्रीधर्ममूर्तिः सभा।
श्रीमद्राजकुमारशोभितसभा प्रख्यातकीर्तिः सभा॥
ब्रह्माविष्णुमहेश्वरैः परिचिता संपूर्णविद्या सभा।
श्रीमन्माधवसिंहराजरुचिदा शृंगारहारा सभा॥ ६॥
अगणितगणकचिकित्सकवेदान्तन्यायशब्दशास्त्रज्ञाः।
दृश्यन्ते बहवः, संगीती नात्र दृश्यतेऽप्येकः॥ ७॥
इत्युक्ते माधवे सिंहे, विठ्ठलेन द्विजन्मना।
नत्वा गणेश्वरं देवं रच्यते रागमंजरी॥ ८॥
युष्मदादेशमन्वेति प्रजाचक्रं जगत्रये।
किंतु मत्प्रेमतः संतः पुरस्कुर्वन्तु मत्कृतिम्॥ ९॥
बहुगतिरंजकरसिको गुंजत्तानक्रिया द्विपक्षश्च।
अकवश्चैकरेफोऽयं जयति श्रीरागमंजरीरसपः॥ १०॥
नादश्रुतिस्वरग्राममूर्छनातानमंडितः।
जनचित्तं रंजयति स रागः कथितो बुधैः॥ ११॥

अथ नादः ।

मनो युंक्ते विवक्ष्वात्मा हन्ति वह्निं मनोऽनलः ।
प्रेरयत्यनिलं प्राणाननिलश्चोर्ध्वक्रमाच्चरन् ॥ १२ ॥
नाभिहृद्गलशीर्षास्येष्वाविर्भावयति ध्वनिम् ।
नादोऽति सूक्ष्मः सूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः ॥ १३ ॥
पंचाख्या इति धत्तेऽसौ चतुर्धा व्यवहारतः ।
अनुमंद्रो नाभिदेशे मंद्रो हृदि गले मतः ॥ १४ ॥
मध्यस्तारस्तु मूर्ध्नि स्याद्द्विगुणश्चोत्तरोत्तरः ।
तद्ग्राहकाश्च श्रुतयो यथा पारदगर्तकाः ॥ १५ ॥
ध्वनिस्तु नदधातोर्हि सद्भिर्नादो घ्निस्मृतः ॥

इति नादः ।

हेतवो नादभेदस्य तिर्यक् सच्छिद्रनाडिकाः ।
द्वाविंशतिः प्रतिस्थानं सोपानाकारवत्क्रमात् ॥ १६ ॥
वायुपूरणतस्तारस्तत्तारस्तूत्तरोत्तरम् ।
प्रभवंत्युच्चोच्चतराः श्रुतयः श्राव्यमात्रतः ॥ १७ ॥
तीव्रा कुमुद्वती मंदा छंदोवती दयावती ।
रंजनी रतिका रौद्री क्रोधा वज्री प्रसारिणी ॥ १८ ॥
प्रीतिर्मृजा क्षिती रक्ता संदीपिन्यथ लापिनी ।
मदंती रोहिणी रम्या चोग्रा क्षोभिणिकेतिच ॥ १९ ॥
श्रुतिनामानि ख्यातानि पूर्वाचार्यैः क्रमादिति ॥

इति श्रुतयः।

रागादिव्यवहाराय तासु सप्त स्वराः स्थिताः ।
षड्जश्च ऋषभश्चैव गांधारो मध्यमस्तथा ॥ २० ॥
पंचमो धैवतश्चाथ निषादश्चेत्यनुक्रमात् ।
तेषां संज्ञाः सरिगमपधनीत्यपरा मताः ॥ २१ ॥

वेदाचलांकश्रुतिषु त्रयोदश्यां श्रुतौ ततः ।
सप्तदश्यां च विंश्यां च द्वाविंश्यां च श्रुतौ क्रमात् ॥ २२ ॥
षड्जादीनां स्थितिः प्रोक्ता प्रथमा भरतादिभिः ।
असपाः पूर्वपूर्वस्मात्संचरंत्युत्तरोत्तरम् ॥ २३ ॥
त्रिस्त्रिर्गतीस्ते प्रत्येकं याति गश्च चतुर्गतीः ।
यद्यद्रागोपयोगः स्यात्तत्तदिच्छा गतिर्भवेत् ॥ २४ ॥
साधारणः कैशिकी चान्तरकाकलिनौ तथा ।
साधारणः कैशिकी द्वौ क्रमाद्गतिगनिक्रमः ॥ २५ ॥
ऊर्ध्वखलस्तु गांधारो मध्यमोपरि संस्थितः ।
मस्य त्रिगतिभेदाश्च मनुः पक्षान्तिको नृपः ॥ २६ ॥
अद्य कैशिकि नावाद्यादुक्षखलौ द्वितीयकः । (?)
अत्युछंखलनामानौ तृतीयगतिकौ रिधौ ॥ २७ ॥
इत्येवं स्वरभेदाश्च स्थाने स्थाने भवन्ति हि ॥
मयूरचातकछागक्रौंचकोकिलदर्दुराः ।
गंजश्च सप्तषड्जादीन् क्रमादुच्चारयन्त्यमी ॥ २८ ॥
चतुर्विधाः स्वरा वादी संवादीच विवाद्यपि ।
अनुवादी तु वादी तु प्रयोगे बहुलः स्वरः ॥ २९ ॥
अंशः स्थायीति पर्यायो रागोत्पादनहेतुकः ।
श्रुतयो द्वादशाष्टौ वा ययोरन्तरगोचराः ॥ ३० ॥
मिथः संवादिनौ तौ स्तो गत्यादेश्च विभागतः ।
एकश्रुत्यन्तरौ यौ कौ तौ मिथः प्रतिवादिनौ ॥ ३१ ॥
शेषाणामनुवादित्वं ज्ञेयमन्वर्थतः क्रमात् ।
ग्रहांशन्यासापन्यासा इति भेदास्तथा पुनः ॥ ३२ ॥
गीतारम्भो ग्रहः प्रोक्त अंशो जीवोऽपि व्यापकः ।
गीते समाप्तिकृन्न्यास अपन्यासः स उच्यते ॥ ३३ ॥

विदारीवानपन्यासो विदारी छेदको मुहुः ।
सर्वत्र रागतस्त्वेते स्वरभेदा भवन्ति हि ॥ ३४ ॥

हतिः श्रुतिस्ततो लग्नजातोऽनुरणनध्वनिः ।
भावी दीप्तः श्रोतृचित्तं स्वतो रंजयतिः स्वरः ॥ ३५ ॥

इति स्वराः ।

स्वराणां निचयो ग्रामो मूर्छनादिसमाश्रितः ।
त्रिधा स कथितो भेदात् समध्यमगाख्यया ॥ ३६ ॥

षड्जग्रामः षड्जकस्य संवादी पंचमोऽचलः ।
पंचमो नृपसंस्थश्चेन्मध्यमग्रामकश्च सः ॥ ३७ ॥

स्वस्वपूर्वापरस्वरश्रुतिस्थौ युग्मके गनी ।
गांधारग्रामकः ख्यातः शार्ङ्गदेवेन सूरिणा ॥ ३८ ॥

षड्जग्रामाश्रितान् रागान् सर्वे गायान्ति गायकाः ।
तस्मान्मुख्यतमः षड्जग्राम एव नचापरौ ॥ ३९ ॥

गन्योः स्थाने रिधौ यत्र लघुषड्जपयोर्निमौ ।
गांधारो मध्यमस्थाने गग्रामो याष्टिके मतः ॥ ४० ॥

न्यासग्रहांशेषु च पूर्णताया-।
मथ श्रुतौ षाडवऔडुवेऽपि ॥
सर्वत्र देशीगतरागवृंदे ।
श्रीमद्धनूमान्नियमं न वव्रे ॥ ४१ ॥

इति ग्रामाः ।

क्रमात्स्वराणां सप्तानामारोहे चावरोहणे ।
रागः संमूर्च्छ्यते यत्र श्रोता वा मूर्छना मता ॥ ४२ ॥

ताः सप्त मध्यषड्जेन मूर्छनारभ्यतेऽग्रिमा ।
अधस्तनैर्निषादाद्यैः षड्जस्थानस्थितैः क्रमात् ॥ ४३ ॥

षडन्या मूर्छनाः सार्दीस्तदूर्ध्वं सारयेत्क्रमात् ।
यस्यां यावतिथः षड्जस्तावत्तिथ्येव मूर्छना ॥ ४४ ॥
आद्या चोत्तरमंद्राच रजनी चोत्तरायता ।
शुद्धषड्जा मत्सरीकृताश्वक्रांताभिरुद्गता ॥ ४५ ॥
नामान्येतानि मुनिभिर्मूर्छनानां यथाक्रमम् ॥

इति मूर्छनाः ।

तानाः स्युर्मूर्छनाः शुद्धाः षाडवौडुविती कृताः ।
षट्स्वरैः षाडवाः प्रोक्तास्त्वौडुवाः पंचभिः स्वरैः ॥ ४६ ॥
शुद्धताना इति ख्याताः पूर्णास्तानक्रियात्मकाः ।
द्विविधा तानाक्रिया तंत्र्यां प्रवेशान्निग्रहात्तथा ॥ ४७ ॥
प्रवेशः परसादृश्यमीषत्स्पर्शस्तु निग्रहः ।
असंपूर्णाश्च संपूर्णा व्युत्क्रमोच्चारिताः स्वराः ॥ ४८ ॥
मूर्छनाः कूटतानाः स्युस्तज्ज्ञानोपाय उच्यते ।
प्रस्तार संख्ये नष्टं चोद्दिष्टमित्यथ लक्षणम् ॥ ४९ ॥
कंचित्क्रमं विलिख्यादौ पूर्वपूर्वः परादधः ।
स्वरः स्थाप्यः स चेदग्रे तत्तत्पूर्वस्वरो भवेत् ॥ ५० ॥
प्रस्तारो वामतः कार्यः पुरस्तूपरिवर्तिनः ।
मूलक्रमक्रमात्पृष्ठे शिष्टान् प्रस्तार ईदृशः ॥ ५१ ॥
क्रमात्पूर्वस्वरस्थाङ्कसंख्यांत्यादिस्वराविलम् ।
अंत्यादधोधो विलिखेत्कृतं त्यक्त्वा क्रमो भवेत् ॥ ५२ ॥
यदैकस्वरतश्चांत्योपांत्यस्वरास्ततोऽन्यथा ।
मात्राप्रस्तारक इति विठ्ठलेन प्रकीर्तितः ॥ ५३ ॥

इति प्रस्तारः ।

अंकानेकादि सप्तान्तानूर्ध्वमूर्ध्वं लिखेत्क्रमात् ।
हते पूर्वेण पूर्वेणांकेनांकं परं परम् ॥ ५४ ॥

एकस्वरादि तानानां संख्या संजायते स्फुटम् ॥

इति संख्या ।

मूर्छनांत्यस्वरस्थांकाः प्रश्नांकैः पातयेत्तु तान् ।
शेषान्प्राक्प्राक्स्वरस्थांकैर्यथाहननसंभवैः ॥ ५५ ॥
क्रमेण पातयेद्येनाहतिस्तावतिथः स्वरः ।
हतेरभावतः किंतु कोऽपि पूर्वस्थितः स्वरः ॥ ५६ ॥
स्याद्वितीयाद्गणनं नष्टसिद्धिर्भवेत्तदा ॥

इति नष्टम् ।

नष्टबोधगता येऽकास्तानन्त्यांकेषु पातयेत् ।
शिष्टउद्दिष्टसिद्धिः स्यादित्यभाषत विठ्ठलः ॥ ५७ ॥

इत्युद्दिष्टम् ।

गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः ।
स्थाय्यारोह्यवरोही च संचारीत्यथ लक्षणम् ॥ ५८ ॥
स्थित्वा स्थित्वा प्रयोगः स्यादेकस्यैव स्वरस्य यः ।
स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ ॥ ५९ ॥
एतत्संमिश्रणाद्वर्णः संचारी परिकीर्तितः ॥

इति वर्णाः ।

विशिष्टवर्णसंदर्भमलंकारं प्रचक्षते ।
तस्य भेदा बहुतरा योजनीया विचक्षणैः ॥ ६० ॥

इति अलंकाराः ।

गमकः स्वरकंपः स्यात् श्रोतृहृदयरंजकः ॥

इति गमकाः ।

ग्रहांशतारमंद्रादि पूर्णापूर्णविवेकतः ।
वैचित्र्ययुक्ता गमकैरालप्तिः कथिता बुधैः ॥ ६१ ॥

न्यासादिस्थानमुज्झित्वा मध्येऽमध्येऽल्पता युजाम् ।
स्वराणां या विचित्रत्वकारिण्यंशादि संगतिः ॥ ६२ ॥

अनभ्यासैः क्वचित्क्वापि लंघनैरेव केवलैः ।
कृतालप्तिर्मार्गः स्यात्ताने ताने प्रयोगतः ॥ ६३ ॥

इति आलप्तिः ।

उक्तपूर्वस्वरगतिमेलाः स्यू रागसंभवाः ।
रागा अनंतकास्तस्माद्रागव्यक्तिस्तु वीणया ॥ ६४ ॥

इमां काष्ठमयीं वीणां वावदूकयितुं मया ।
क्रियतेऽत्र स्वरगतिः क्रियज्ज्ञांगमवीणिकाम् ॥ ६५ ॥

एकद्वित्र्यंकसांख्येन त्वेकद्वित्रिगतिस्वरः ।
प्रस्तारो नियतः कार्यो व्यस्ताव्यस्तक्रमात्क्रमः ॥ ६६ ॥

पूर्वापरस्वरस्थानं किंतु नैकत्र कारयेत् ।
विवादी तु सदा त्याज्यः क्वचित्तानाक्रियात्मकः ॥ ६७ ॥

काकल्यंतरयोः स्थाने तृतीयगतिकौ निगौ ।
प्रयोगे च प्रतिनिधी क्रियेते सांप्रदायिकैः ॥ ६८ ॥

स्वल्पप्रयोगः सर्वत्र काकली चांतरस्वरः ।
रत्नाकरेऽपि चेत्युक्तः शार्ङ्गदेवेन सूरिणा ॥ ६९ ॥

इति स्वराध्यायः ।

---

## अथ रागाध्यायः ।

एकैकमेळतो रागा बहवः संभवन्ति हि ।
तेषामगाधरूपत्वात् संख्यां कर्तुं न शक्यते ॥ ७० ॥

इतस्ततश्च संमथ्य विठ्ठलेनाखिलान् स्वरान् ।
विज्ञानतो किलात्मानं स्फूर्जयत्यग्रतो विधेः ॥ ७१ ॥

अधुनेत्युक्तमेलेभ्यः प्रसिद्धाः कतिचिद् ब्रुवे ।
मुखारी सोमरागश्च टोडी गौडी वराटिका ॥ ७२ ॥
केदारः शुद्धनाटश्च देशाक्षी देशिकारकः ।
सारंगाहेरिकल्याणकामोदाश्च हिजेजिकः ॥ ७३ ॥
नादरामक्रिहिंदोलौ कर्णाटश्च हमीरकः ।
मालवकैशिकोऽतश्च श्रीरागश्चेत्यनुक्रमात् ॥ ७४ ॥
एतेषां मेलसंजातरागाणां च यथाक्रमम् ।
लक्षणं वक्ष्यते किंतु लोकवृत्तानुसारतः ॥ ७५ ॥

## अथ मेलाः

### ( १ ) अथ मुखारीमेलः ।

मुखारी मेलतोऽन्येऽपि मुखार्याद्या भवन्ति हि ।
सप्तस्वराः स्वभावाश्च मुखारीमेलको भवेत् ॥
सदा मुखारिका गायेत् सत्रिका पूर्णरूपिका ॥

इति मुखारी ॥ १ ॥

इति मुखारीमेलः ।

---

### ( २ ) अथ सोमरागमेलः ।

निरेकगतिकः सोममेलः सदाशिवप्रियः ।
अमुष्मादपिकेचित्तु रागाऽनंता भवन्ति हि ॥
सत्रिकः सोमरागः स्यात्सदाकाले शिवप्रियः ॥

इति सोमरागः ॥ २ ॥

इति सोमरागमेलः ।

---

### ( ३ ) अथ टोडीमेलः ।

टोडीमेलः प्रसिद्धः स्यादेकैकगतिकौ गनी ।

मेलादतष्टोडिका च शुद्धभैरवकादयः ॥
मत्रिका पधकंपाद्या पूर्णा टोडी प्रभातिका ॥
इति टोडी ॥ ३ ॥

सत्रिको रिविहीनश्च प्रभाते शुद्धभैरवः ॥
इति शुद्धभैरवः ॥ ४ ॥

इति टोडीमेलः ।

---

## ( ४ ) अथ गौडीमेलः ।

निगौ तृतीयगतिकौ गौडीमेलः प्रकीर्तितः ।
गौडीकर्णाटबंगालौ गुर्जरी बहुली तथा ॥
आसावरी रामकली मारुर्गुणकरी तथा ।
टक्कश्च शुद्धललितः पंचमः पटमंजरी ॥
मालवगौडकः पूर्वी भैरवी पाडिकादयः ।
धगत्यक्ता सत्रिका च सायं गौडी विराजते ॥
इति गौडी ॥ ५ ॥

गत्रिः कर्णाटबंगालो रिहीनः प्रातरेव हि ॥
इति कर्णाटबंगालः ॥ ६ ॥

रित्रिका पेन हीना वा गुर्जरी प्रातरिष्टदा ॥
इति गुर्जरी ॥ ७ ॥

मत्रिका गनिहीना वा बहुली गेयापराह्नतः ॥
इति बहुली ॥ ८ ॥

मत्रिकासावरी पूर्णा सदा गेयातिकारुणा ॥
इत्यासावरी ॥ ९ ॥

सत्री रामकली पूर्णा सदा गेया विरागिणी ॥
इति रामकली ॥ १० ॥

सत्रिका रिधहीना च सदा मारुः प्रकाशते ॥
इति मारुः ॥ ११ ॥

संपूर्णा स्याद्गुणकरी सायं स्फुरितपंचमा ॥

इति गुणकरी ॥ १२ ॥

सायं स्यात्सत्रिकष्टक्कः काकल्यंतरराजितः ॥

इति टक्कः ॥ १३ ॥

पहीनः सत्रिकः शुद्धललितः प्रातरिष्टदः ॥

इति शुद्धललितः ॥ १४ ॥

रिहीनः पत्रिकः प्रातः पंचमः परिशोभते ॥

इति पंचमः ॥ १५ ॥

सर्वदा पत्रिका पूर्णा राजते पटमंजरी ॥

इति पटमंजरी ॥ १६ ॥

नित्रिको रिपहीनो वा सायं मालवगौडकः ॥

इति मालवगौडः ॥ १७ ॥

संपूर्णा सत्रिका पूर्वी सायंकाले विराजते ॥

इति पूर्वी ॥ १८ ॥

सत्रिका रिपमुद्रा च पूर्णा भैरविका सदा ॥

इति भैरवी ॥ १९ ॥

सत्रिका धगहीनारोहाऽवरोहेण संयुता ।
सायंकाले च गातव्या पाडी शृंगारवल्लभा ॥

इति पाडी ॥ २० ॥

इति गौडीमेलः ।

---

( ५ ) अथ वराटीमेलः ।

निमौ तृतीयगतिकौ वराटीमेल एव सः ।
अस्माद्वराटी श्यामादिवराट्याद्याश्चानेकशः ॥
सत्रिः श्यामवराटी च पूर्णा काकलिराजिता ॥

इति श्यामवराटी ॥ २१ ॥

शुद्धवराटिका सत्रिः सदा पूर्णा मनोहरा ॥

इति शुद्धवराटी ॥ २२ ॥

इति वराटीमेलः ।

---

( ६ ) अथ केदारमेलः ।

रिधौ द्वितीयगतिकौ तृतीयगतिकौ निगौ ।
एष केदारमेलः स्यादतो जाताश्च रागकाः ॥
केदारगौंडमल्हारनटनारायणास्ततः ।
वेलावली च भूपाली कांबोजी मधुमाधवी ॥
शंकराभरणः सावेरी सुहवी नारायणी ततः ।
केदारनाटश्चान्येऽपि रागाः स्युरेतन्मेलतः ॥
नित्री रिपोनः केदारो निशीथे करुणप्रियः ॥

इति केदारः ॥ २३ ॥

धत्रिः प्रभाते गौंडःस्यात्संपूर्णः शंकरप्रियः ॥

इति गौंडः ॥ २४ ॥

धत्रिः सपाभ्यां हीनोऽयं मल्हारोऽप्युषासि प्रियः ॥

इति मल्हारः ॥ २५ ॥

नटनारायणो रागः काकल्यंतरराजितः ।
संपूर्णः सततं सत्रिर्वर्षाकालेऽतिवल्लभः ॥

इति नटनारायणः ॥ २६ ॥

धत्रिका रिपहीना वा प्रातर्वेलावलीष्टदा ॥

इति वेलावली ॥ २७ ॥

मत्रिर्निगाभ्यां हीना च भूपाली प्रातरुत्तमा ॥

इति भूपाली ॥ २८ ॥

कांबोजी मनिहीना वा सत्रिः सांतरकाकली ॥

इति कांबोजी ॥ २९ ॥

मत्रिः प्रातरसौ गेया रिधास्ता मधुमाधवी ॥

इति मधुमाधवी ॥ ३० ॥

शंकराभरणः सत्रिः प्रातः संपूर्णमुद्रितः ॥

इति शंकराभरणः ॥ ३१ ॥

सपवर्ज्या च सावेरी धत्रिका प्रातरिष्टदा ॥

इति सावेरी ॥ ३२ ॥

धत्रिः पूर्णा च सुहवी प्रातःकाले सुखप्रदा ॥

इति सुहवी ॥ ३३ ॥

नारायणी गत्रिका च संपूर्णाप्युषासि प्रिया ॥

इति नारायणी ॥ ३४ ॥

केदारनाटकः सात्रिः संपूर्णः सायमीप्सितः ॥

इति केदारनाटः ॥ ३५ ॥

इति केदारमेलः ।

---

( ७ ) अथ शुद्धनाटमेलः ।

तृतीयगतिकौ शुद्धनाटमेले रिधौ गनी ।
अस्मिन्मेले संभवन्ति शुद्धनाटादिकाः परे ॥
सत्रिकः शुद्धनाटोऽसौ सायं गंभीरनादवान् ॥

इति शुद्धनाटः ॥ ३६ ॥

इति शुद्धनाटमेलः ।

---

( ८ ) अथ देशाक्षीमेलः ।

तृतीयगतिका निगौ रिश्च देशाक्षिमेलकः ।
अतोऽपि मेलाद्देशाक्षी प्रमुखाद्या भवन्ति च ॥
गत्री रिहीना देशाक्षी प्रातर्गेया विचक्षणैः ॥

इति देशाक्षी ॥ ३७ ॥

इति देशाक्षीमेलः ।

---

( ९ ) अथ देशिकारमेलः ।

तृतीयगतिनिगधा देशिकारस्य मेलकः ।
देशिकारस्तिरत्रणी देशी ललितदीपकौ ॥
विभासाद्यादि केचित्तु संभवन्त्यत्र मेलतः ।
देशिकारोऽपराह्णे स्यात्सात्रिः संपूर्णको भवेत् ॥

इति देशिकारः ॥ ३८ ॥

संपूर्णा सत्रिका गेया सायंकाले च त्रावणी ॥

इति त्रावणी ॥ ३९ ॥

पहीना रित्रिधा देशी सदा गेया विचक्षणैः ॥

इति देशी ॥ ४० ॥

धात्रिः संपूर्णललितः प्रातर्गेयश्च गायकैः ॥

इति ललितः ॥ ४१ ॥

संध्याकाले च गातव्यः धत्रिः संपूर्णदीपकः ॥

इति दीपकः ॥ ४२ ॥

विभासः सत्रिकः पूर्णोऽपोत्रा स्यात्प्रातरेवहि ॥

इति विभासः ॥ ४३ ॥

इति देशिकारमेलः ।

---

( १० ) अथ सारंगमेलः ।

तृतीयगतिमनिधा द्वितीयगतिकोऽपि रिः ।
तुरीयगतिको गश्च मेलः सारंगनामकः ॥
मेलादतोऽपि सारंगप्रमुखाद्या भवन्ति हि ।
सात्रिः संपूर्णः सारंगः सदागेयः पराह्णतः ॥

इति सारंगः ॥ ४४ ॥

इति सारंगमेलः ।

---

( ११ ) अथ आहेरीमेलः ।

एकतृतीयगतिकौ गनिस्वरौ यथाक्रमम् ।
द्वितीयगतिको रिश्च त्वाहेरीमेल एवहि ॥
आहेरीमेलतोऽन्येऽपि आहेर्याद्या ह्यनेकशः ।
सत्रिका सायमाहेरी संपूर्णादिरसाश्रिता ॥

इति आहेरी ॥ ४५ ॥

इति आहेरीमेलः ।

---

( १२ ) अथ कल्याणमेलः ।

मनी तृतीयगतिकौ द्वितीयगतिकोऽपि रिः ।
तृतीयगतिको गश्च एष कल्याणमेलकः ॥
अतोऽपि मेलात्कल्याणप्रमुखाद्या भवन्ति हि ।
सत्रिः संपूर्णः कल्याणः सायंकाले महारुचिः ॥

इति कल्याणः ॥ ४६ ॥

इति कल्याणमेलः ।

---

( १३ ) अथ कामोदमेलः ।

निगावेकैकगतिकौ तृतीयगतिकोऽपि मः ।
एष कामोदमेलः स्यादस्मादन्यतराः परे ॥
सत्रिः संपूर्णः कामोदो गायेत्तुरीययामतः ॥

इति कामोदः ॥ ४७ ॥

इति कामोदमेलः ।

---

( १४ ) अथ हिजेजमेलः ।

गनी ह्येकगती यत्र हिजेजाख्यस्य मेलकः ।

मेलादतो हिजेजश्च भैरवाद्या ह्यनेकशः ॥
हिजेजः सर्वदा पूर्णो नित्रिः सांतरकाकली ॥

इति हिजेजः ॥ ४८ ॥

रिहीनो भैरवः सत्रिः प्रातर्गेयो विशुद्धधीः ॥

इति अपरभैरवः ॥ ४९ ॥

इति हिजेजमेलः ।

---

## ( १५ ) अथ नादरामक्रीमेलः ।

निगौ एकगती मेलो नादरामक्रिया च सः ।
मेलादतो नादरामक्र्याद्याश्च कतिचिद्भवेत् ॥
सत्रिः सायं च संपूर्णा नादरामक्रिया भवेत् ॥

इति नादरामक्री ॥ ५० ॥

इति नादरामक्रीमेलः ।

---

## ( १६ ) अथ हिंदोलमेलः ।

द्वितीयगतिको रिश्च त्वेकैकगतिकौ गनी ।
तदा हिंदोलमेलः स्यादतो हिंदोलरागकः ॥
वसंतरागादन्येऽपि केचित्केचिद्भवन्ति हि ।
हिंदोलको रिपत्यक्तः सत्रिकः प्रातरेव हि ॥

इति हिंदोलः ॥ ५१ ॥

सत्रिर्वसंतः संपूर्णः प्रातर्गेयोऽप्यनंगदः ॥

इति वसंतः ॥ ५२ ॥

इति हिंदोलमेलः ।

---

## ( १७ ) कर्णाटमेलः ।

तृतीयगतिगनिधा द्वितीयगतिकोऽपि रिः ।
तदा कर्णाटमेलः स्यात् तत्र संभूतरागकाः ॥
कर्णाटरागः सामंतः सौराष्ट्री छायनाटकः ।
शुद्धबंगालतौरुष्कतोडिकाद्या ह्यनेकशः ॥
नित्री रिधाभ्यां हीनो वा कर्णाटः सायमिष्टदः ॥

इति कर्णाटः ॥ ५४ ॥

सामंतकस्त्रिसः सायं काकल्यंतरभूषितः ॥

इति सामंतः ॥ ५५ ॥

सत्रिः सायं च सौराष्ट्री पूर्णा शृंगारवल्लभा ॥

इति सौराष्ट्री ॥ ५६ ॥

छायानाटस्त्रिसः सायं काकल्यंतरजीवनः ॥

इति छायानाटः ॥ ५७ ॥

नित्रिकः शुद्धबंगालः संपूर्णोऽप्युषसि प्रियः ॥

इति शुद्धबंगालः ॥ ५८ ॥

तुरुष्कतोडिका मत्रिः पूर्णा पंचमकंपिता ।
मन्याहताप्युषःकाले गेया सम्यक् विचक्षणैः ॥

इति तुरुष्कतोडी ॥ ५९ ॥

इति कर्णाटमेलः ।

---

## (.१८) अथ हमीरमेलः ।

द्वितीयगतिको रिश्च तृतीयगतिकौ निगौ ।
हमीरमेल एषः स्याद्धमीराद्या ह्यनेकशः ॥

सत्रिस्तृतीययामे च हमीरः पूर्ण ईरितः ।

इति हमीरः ॥ ६० ॥

इति हमीरमेलः ।

---

## ( १९ ) अथ मालवकैशिकमेलः ।

एकैकगतिकौ रिधौ निगौ मालवकैशिके ।
अस्मिन्मेले मालवश्रीर्धन्नासी सैंधवी तथा ।
देवगांधार इत्याद्या रागा भवन्त्यनेकशः ॥
सत्रिः सायं च रसिको मालवकैशिकोऽधगः ॥

इति मालवकैशिकः ॥ ६१ ॥

रिधाल्पा सत्रिका पूर्णा मालवश्रीः सदारुचिः ।

इति मालवश्रीः ॥ ६२ ॥

सत्रिका रिधवर्ज्या च धन्नासी प्रातरेव हि ॥

इति धन्नासी ॥ ६३ ॥

सत्रिका त्वरिपा नित्यं सैंधवी गमकैर्युता ।

इति सैंधवी ॥ ६४ ॥

संपूर्णः सत्रिको देवगांधारः सर्वदा रुचिः ॥

इति देवगांधारः ॥ ६५ ॥

इति मालवकैशिकमेलः ।

---

## ( २० ) अथ श्रीरागमेलः ।

धरिन्येकैकगतिका गस्तृतीयगतिर्यदा ।

श्रीरागमेल एषः स्यात् श्रीरागाद्या ह्यनेकशः ॥
श्रीरागः सत्रिकः सायं धगोनः श्रीरसप्रियः ॥

इति श्रीरागः ॥ ६६ ॥

इति श्रीरागमेलः ।

---

इत्याद्यनंतरागाश्च पूर्वोक्तगतिमेलतः ।
अमुना चाध्वना सम्यक् योजनीया विचक्षणैः ॥
अन्येऽपि पारसीकेया रागाः परदनामकाः ।
संपूर्णाः सर्वगमकाः काकल्यंतरिताः सदा ॥
रहायी देवगांधारे (१) कानरे च निशाबरः (२) ।
सारंगे माहुरो नाम (३) जंगूलोऽथ बंगालके (४) ॥
देश्यामाहंगको नाम (५) बारा मल्हाररागके (६) ।
केदारेऽपि च सूह्वाथ (७) धनास्यां च इरायका (८) ॥
जिजावन्त्यां च हौसेनी (९) मालवे मुसलीककः (१०) ।
कल्याणे यमनो गायेत् (११) सर्पर्दोऽथ विलावले (१२)॥
देशिकारे वाखरेजः (१३) आसावर्यां हिजेजकः (१४) ।
देवागर्यां मुशकाख्यः (१५) एवमन्येऽपि योजयेत् ॥

बहुरसमकरंदा सच्चिदानंदकंदा ।
अविमुकुलितयासां किंनरीरागराशी ॥
वरनररतिमोदा कामिनां श्रीविनोदा ।
जनधरश्रुतिचूडां मंजरीरागचूडा ॥ १ ॥

देमकजननीनिजसुतविठ्ठलकृतरागमंजरीकेयम् ।
सुंदररक्तिनिवेशितवाग्देवी श्रवणमंडना भवतु ॥ २ ॥

संगीतार्णवमंदिरः प्रतिदिनं साहित्यपद्माकरः ।
प्रोद्भूतप्रबलप्रबोधजनको भासां निधिः सांप्रतम् ॥
विद्यावादविनोदिनामतितरामग्रेसरः केसरी ।
सोऽयं माधवसिंहराजतिलको जीयाच्चिरं भूतले ॥ ३ ॥

इति कर्णाटजातीयपुंडरीकविठ्ठलकृता
रागमंजरी समाप्ता ।
॥ शुभं भवतु ॥